सरह तावइयं सारंमि त्ति ।" ततः "आवत्तियं ति" अभणिते सति तस्यैव साधोर्यः परिष्ठापनिकभोक्ता तस्यैव यदुद्धरितं शेषं तत्परित्याज्यं भवति । इदं च पूर्वोक्तस्यैव व्याख्यानं द्रष्टव्यं, न तु पुनरुक्तमिति ।

किंविधं पुनः चतुर्थोपवासिकाऽऽदेः परिष्ठापनिकं कल्पते ?, अत आह—

विहिगहियं विहिभुत्तं, अइरेगं भत्तपाण भोत्तव्वं ।
विहिगहिए विहिभुत्ते, एत्थ य चउरो भवे भंगा ॥ ५६२ ॥

विधिना उद्गमदोषाऽऽदिरहितं सारासारविभागेन च यत्र कृतं पात्रके तद्विधिगृहीतं, तथा विधिभुक्तं कटकच्छेदेन प्रतरच्छेदाऽऽदिना वा यद्भुक्तं तद्विधिभुक्तमुच्यते, तदेवंविधं विधिगृहीतं विधिभुक्तं च यदतिरिक्तं सञ्जातं भक्तं पानकं वा तद्भोक्तव्यं परिष्ठापनकं कल्पते । अत आह—प्रकारान्तरेण–अत्र च विधिगृहीते विधिभुक्ते च अस्मिन् पदद्वये चत्वारो भङ्गका भवन्ति । तद्यथा–"विहिगहियं विहिभुत्तं एगो भंगओ, विहिगहियं अविहिभुत्तं बीओ भंगो, अविहिगहियं विहिभुत्तं तइओ भंगओ, अविहिगहियं अविहिभुत्तं चउत्थो भंगओ ।

इदानीं भाष्यकृद्विधिगृहीताविधिगृहीतयोः स्वरूपं प्रतिपादयन्नाह—

उग्गमदोसाइजढं, अहवा बीयं जहिं जहापडियं ।
इइ एसो गहणविही, असुद्धपच्छायणे अविही ॥ २६ ॥

उद्गमदोषाऽऽदिभिः(जढं)त्यक्तं यत् तद् विधिगृहीतम्, अथवा यद्वस्तु मण्डकाऽऽदि यथैव यस्मिन् स्थाने पतितं भवति तत्तथैवाऽऽस्ते, न तु स मारयति, इत्येष ग्रहणविधिः । ओघ० ।

गृहामत्रे भोजनं न कर्त्तव्यम्—

जे भिक्खू गिहिमत्ते भुंजइ, भुंजंतं वा साइज्जइ ॥ १४ ॥

गिहिमत्तो थंटिकरगादि, तत्थ जो असणादी भुंजति तस्स चउलहुं ।

गाहा—

जे भिक्खू गिहिमत्ते, तसथावरजीवदेहणिप्फण्णे ।
भुंजेज्जा असणादी, सो पावति आणमादीणि ॥ ७७ ॥

सो गिहमत्तो दुविधो–थावरजीवदेहनिप्फण्णो वा, तसजीवदेहनिप्फण्णो वा । सेसं कंठं ।

ते य इमे–

सव्वे वि लोहपाया, दंते सिंगे य पक्कभोमे य ।
एते तसणिप्फण्णा, दारुगतुंबाइया इतरे ॥ ७८ ॥

सुवण्णरययतंबकंसादिया सव्वे लोहपाया हत्थिदंतमया महिसादिसिंगेहिं वा कयं कंचणियादि वा पक्कभोमं, एतं सव्वं तसणिप्फण्णं, (इतर त्ति) थावरणिप्फण्णं तं दारुयतुंबघडियं भण्णइ, मणिमयं वा, एतेहिं जो भुंजति तस्स चउलहुं, आणादिया इमे दोसा ।

गाहा—

पुव्विं पच्छा कम्मे, ओसक्कऽहिसक्कणे य उक्काया ।
आणणणयणपन्नाहण, दरभुत्ते हरिय वोच्छेदो ॥ ७९ ॥

जे भद्दया गिही ते पुव्वं चेव संजयट्ठा धोवेउ ठएज्जा, पंतो पच्छाकम्मं करेति, जाव संजयाण ण भोयणवेला ताव ण भुंजामो त्ति ओसक्कणा, भुत्तेसु संजएसु भुंजीहामो त्ति पुणो णिमज्जणाणिमज्जणोव्वट्टणायमादेसु छक्कायविराहणा, आणिज्जंतं णिज्जंतं वा भिज्जेज्जा, अवहंतं अण्णं पवहावेज्जा, साधूण वा दरभुत्ते भज्जति । तत्थ अदेंतस्स अंतरायदोसा, देंतस्स भाणअहाणी, साधूहिं वा आणीतं हरेज्ज, पच्छा जा तणफलपत्तुप्पवट्टेसु विराधणा वुत्ता सा इह गेहिमत्ते भाणियव्वा । भाणअहाणिए रुट्ठो भणेज्ज–मा पुणो संजयाणं देह त्ति वोच्छेदे, जम्हा एए दोसा तम्हा गिहिमत्ते ण भुंजियव्वं ।

कारणे भुंजति । गाहा—

बितियपदं गेलण्णे, असती य अभाविते व खेत्तम्मि ।
असिवादी परलिंगे, परिक्खणट्ठा व जतणाए ॥ ८० ॥

सुवेज्जट्ठा गिलाणट्ठा वा गिहिमत्ता घेप्पंति, भायणस्स वा असती राया दिक्खितो, अभावियस्सट्ठा वा सगच्छे वा उवग्गहट्ठा, असिवे वा सपक्खपंताए, परलिंगकरणे घेप्पति, सेहो सद्दहति ण व त्ति तप्परिक्खणट्ठा घेप्पति, जयणाए त्ति जहा पुव्वभणिया पच्छाकम्मादिया दोसा ण भवंति तहा घेप्पंति । नि० चू० १२ उ० । तथोद्वाहाऽऽदिजेमनवारगृहे यथा यतीनां विहर्त्तुं न कल्पते, तथैव पौषधिकसत्कजेमनवारगृहे, अन्यथा वेति प्रश्ने, उत्तरम्—विवाहजेमनवारवत्पौषधिकजेमनवारगृहेऽपि मुनीनां विहर्त्तुं न कल्पते इति ॥ २०४ ॥ तथा–रात्रिराद्धं पूपिकाऽऽदि केषाञ्चिद्रात्रिभोजनविरतिमतां गृहिणामपि न कल्पते, तथा यतिजनानां तदपि कल्पते, न वेति, प्रश्ने, उत्तरम्—तेषां रात्रिराद्धाऽऽद्यग्रहणं तु बहुजीवविराधनासम्भवाद्रात्रिप्रथमप्रहरद्वयराद्धपूपलिकाद्विदलाऽऽदिषु पर्युषितत्वशङ्कासम्भवाच्च, न तु रात्रिराद्धाऽऽद्यग्रहणे रात्रिभोजनविरतिभङ्ग इति, यतिभिस्तु पर्युषितत्वसम्भावनायां तन्न ग्राह्यम्, अन्यथा तु यथावसरं ग्रहणीयं, तेषां परार्थकृतत्वग्राह्यत्वेन विराधनाया अभावादिति ॥ २०५ ॥ प्र० । सेन० २ उल्ला० ।

भोयणओ–भोजनतम्–अव्य० । भोजनीयवस्त्वाश्रित्येत्यर्थे, उत्त० १ अ० ।

भोयणकहा–भोजनकथा–स्त्री० । भक्तकथायाम्, ध० र० ।

तत्कथा—

" अहो क्षीरस्याज्यं मधुरमधुराज्यखण्डान्वितं चेत्
रसः श्रेष्ठो दध्नो गुडसुखकरं व्यञ्जनेभ्यः किमन्यत् ।
न पक्वान्नादन्यद्रमयति मनः स्वादुताम्बूलमेकं—
परित्याज्याः प्राज्ञैरशनविषयाः सर्वदैवेति वार्त्ता ॥ ३५ ॥ "

ध० र० १ अधि० १३ गुण ।

भोयणपडिकूलया–भोजनप्रतिकूलता–स्त्री० । प्रकृत्यनुचितभोजनतायाम्, स्था० ६ ठा० ।

भोयणपरिणाम–भोजनपरिणाम–पुं० । बुभुक्षायाम्, स्था० ५ ठा० २ उ० । आहारविशेषस्य स्वभावे, स्था० ।

छव्विहे भोयणपरिणामे पण्णत्ते । तं जहा–मणुण्णे, रसिए, पीणणिज्जे, विंहणिज्जे, दीवणिज्जे, दप्पणिज्जे ॥

भोजनस्येत्याहारविशेषस्य परिणामः पर्यायः स्वभावो धर्म इति यावत् । तत्र [मणुण्णे त्ति] मनोज्ञमभिलषणीयं भोजनमित्येकस्तत्परिणामः, परिणामवता सहाभेदोपचारात् , तथा-रसिकं माधुर्याऽऽद्युपेतं, तथा प्रीणनीयं रसाऽऽदिधातुसमताकारि, बृंहणीयं धातूपचयकारि, दीपनीयम् अग्निबलजनकम् । पाठान्तरे तु-मदनीयं मदनोदयकारि, दर्पणीयं बलकरमुत्साहवृद्धिकरमित्यन्य इति । अथवा—भोजनस्य परिणामो विपाकः, स च मनोज्ञः शुभत्वान्मनोज्ञभोजनस्य-आभिरत्वाद्वस्येवमन्येऽपि । स्था० ६ ठा० ।

भोयणविहि-भोजनविधि-पुं० । भोजनप्रकारे, उपा० १ अ० । ( ' आणंद ' शब्दे द्वितीयभागे १०६ पृष्ठे सूत्रम् )

भोयय-भोजक-पुं० । भोक्तरि, भर्तरि च । सू० १ श्रु० ३ अ० ।

भोल-देशी-सरलचित्ते, "वासुपुज्जस्स य तित्थे, भोला कालगलुञ्छुवी । मेघमालिज्जिया आसी, गोयमा ! मणुण्णला ॥ १ ॥" महा० ६ अ० ।

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-
श्रीमद्भट्टारक-जैनश्वेताम्बराऽऽचार्य श्री श्री १००८ श्री-
विजयराजेन्द्रसूरीश्वरविरचिते ' अभिधानराजेन्द्रे '
भकाराऽऽदिशब्दसङ्कलनं समाप्तम् ॥

तत्समाप्तौ च-

## ॥ समाप्तश्चायं पञ्चमो भागः ॥

* श्री *

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-

कलिकाल-सर्वज्ञ कल्प-श्रीमद्भ

ट्टारक जैन श्वेताम्बराचार्य

श्री श्री १००८ श्री विज-

यराजेन्द्रसूरिविरचिते

अभिधान राजेन्द्रे

शब्दसङ्कलने

पञ्चमो भागः समाप्तः ।